अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ॥
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥

नष्टो मोहोऽज्ञानजः समस्तसंसारानर्थहेतुः सागर इव दुस्तरः । स्मृतिश्चाऽऽत्मतत्त्वविषया लब्धा । यस्या लाभात्सर्वग्रन्थीनां विप्रमोक्षः । त्वत्प्रसादात्तव प्रसादान्मया त्वत्प्रसादमाश्रितेनाच्युत । अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलमेतावदेवेति निश्चितं दर्शितं भवति यदुताज्ञानसंमोहनाश आत्मस्मृतिलाभश्चेति । तथाच श्रुतावनात्मविच्छोचामीत्युपन्यस्याऽऽत्मज्ञाने सर्वग्रन्थिविप्रमोक्ष उक्तः । भिद्यते हृदयग्रन्थिस्तत्र को मोहः कः शोक एकत्वमनुपश्यत इति च मन्त्रवर्णः । अथेदानीं त्वच्छासने स्थितोऽस्मि गतसंदेहो मुक्तसंशयः करिष्ये वचनं तवाहं त्वत्प्रसादात्कृतार्थो न मम कर्तव्यमस्तीत्यभिप्रायः ॥ ७३ ॥

प्रेमोपदिष्टात्मज्ञानस्य अज्ञानसंदेहविपर्याससराहितस्य पृष्टस्य भगवदनुग्रहप्राप्तिकथनेन भगवन्तं परितोषयिष्यन्नर्जुनो विज्ञापितवानित्याह—अर्जुन इति । अज्ञानोत्थस्याविवेकस्य नष्टत्वमेव स्पष्टयति—समस्त इति । स्वयंज्योतिषि प्रतीचि ब्रह्मण्यविद्याभ्रमं विद्याऽपनयति नाविदितं प्रकाशयतीति मत्वाऽऽह—स्मृतिश्चेति । स्मृतिलाभे किं स्यादिति चेत्तदाह—यस्या इति । मोहनाशे स्मृतिप्रतिलम्भे चासाधारणं कारणमाह—त्वत्प्रसादादिति । प्रकृतेन प्रश्नप्रतिवचनेन लब्धमर्थं कथयति—अनेनेति । यदुक्तं स्मृतिप्रतिलम्भादशेषतो हृदयग्रन्थीनां विप्रमोक्षः स्यादिति तत्र प्रमाणमाह—तथा चेति । ज्ञानादज्ञानतत्कार्यनिवृत्तौ श्रुत्यन्तरमपि संवादयति—भिद्यत इति । भगवदनुग्रहादज्ञानकृतमोहदाहानन्तरमात्मज्ञाने प्रतिलब्धे त्वदाज्ञाप्रतीक्षोऽहमित्युत्तरार्धं व्याकरोति—अथेति । तव वचनं करिष्येऽहमित्यत्र तात्पर्यमाह—अहमिति ॥ ७३ ॥

परिसमाप्तः शास्त्रार्थोऽथेदानीं कथासंबन्धप्रदर्शनार्थम्—

संजय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

---

१ क. 'हदाहानं तदन' । २ क. 'प्तः सकलाम्नायशा' ।

इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनः संवादमिमं यथोक्तमश्रौषं श्रुतवानस्मि अद्भुतमत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरम् ॥ ७४ ॥

शास्त्रार्थे समाप्ते सत्यस्यामवस्थायां संजयवचनं कुत्रोपयुक्तमिति तत्राह—परिसमाप्त इति। वासुदेवस्य सर्वज्ञस्य सर्वेश्वरस्य कृतार्थस्य पार्थस्य पृथासुतस्यार्जुनस्य महात्मनोऽक्षुद्रबुद्धेः सर्वाधिकारिगुणसंपन्नस्य सम्यञ्चं वादं संवादं गुरुशिष्यभावेन प्रश्नप्रतिवचनाभिधानमिममनुक्रान्तमद्भुतं विस्मयकरं रोमाणि हृष्यन्ति पुलकी भवन्त्यनेनेति रोमहर्षणमाह्लादकरं यथोक्तं श्रुतवानस्मीत्याह—इत्येवमिति ॥ ७४ ॥

तं चेमम्—

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ॥
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

व्यासप्रसादात्ततो दिव्यचक्षुर्लाभाच्छ्रुतवानेतं संवादं गुह्यमहं परं योगं योगार्थत्वात्संवादमिमं योगमेव वा योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयं न परम्परातः ॥ ७५ ॥

प्रकृष्टं संवादं कथमश्रौषीरिति चेत्तत्राऽऽह—तं चेति। एतत्पदं संवादपरत्वात्पुंलिङ्गत्वेन नेतव्यमित्याह—एतमिति। परमपुरुषार्थौपयिकत्वात्परत्वं परं गुह्यमतिशयेन गुह्यं रहस्यमिति वा। योगो ज्ञानं कर्म च तदर्थत्वादयं संवादो योग उक्तः, अथवा चित्तवृत्तिनिरोधस्य योगस्याङ्गत्वादयं संवादो योग इत्याह—संवादमिति। योगानामीश्वरो योगेश्वरस्तदनुग्रहहेतुत्वाद्योगतत्फलयोस्ततः साक्षादव्यवधानेन श्रुतवान्न परम्परयेत्याह—योगेश्वरादिति। स्वयं स्वेन पारमेश्वरेणातिरस्कृतज्ञानैश्वर्यरूपेण कथयतो व्याचक्षाणादित्यर्थः ॥ ७५ ॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

हे राजन्धृतराष्ट्र संस्मृत्य संस्मृत्य संवादमिममद्भुतं केशवार्जुनयोः पुण्यं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥ ७६ ॥

यथोक्तं संवादं भगवतः श्रुत्वा किमुपेक्षसे नेत्याह—राजन्निति। पुण्यत्वं साधयति—श्रवणादपीति ॥ ७६ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥

---

१ ख. झ. °द्भुतं वि°। २ घ. झ. °वानिमं गुह्य°। ३ घ. छ. झ. °वानिमं सं°।

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान्हे राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥**

यत्तु विश्वरूपाख्यं रूपं सगुणमर्जुनाय भगवान्दर्शितवान्ध्यानार्थं तदिदानीं स्तौति—**तच्चेति** ॥ ७७ ॥

**किं बहुना—**

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥**

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

**यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानामीश्वरस्तत्प्रभवत्वात्सर्वयोगबीजश्च कृष्णो यत्र पार्थो यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा तत्र श्रीस्तस्मिन्पाण्डवानां पक्षे विजयस्तत्रैव भूतिः श्रियो विशेषो विस्तारो भूतिर्ध्रुवाऽव्यभिचारिणी नीतिर्नय इत्येवं मतिर्ममेति ॥ ७८ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥**

द्वयोरपि कृष्णार्जुनयोर्नरनारायणयोः संवादस्य प्रामाण्यार्थं परममुत्कर्षं दर्शयति—**किं बहुनेति**। कथं सर्वेषां योगानामीश्वरो भगवानिति तत्राऽऽह—**तत्प्रभवत्वादिति**। सर्वयोगो ज्ञानं कर्म च तस्य बीजं शास्त्रीयं ज्ञानवैराग्यादि तद्धि भगवदधीनं तदनुग्रहविहीनस्य तदयोगादतो योगतत्फलयोर्भगवदनुग्रहायत्तत्वाद्भगवतो योगेश्वरत्वमित्यर्थः। श्रीर्लक्ष्मीर्विजयः परम उत्कर्षः। राज्ञो धृतराष्ट्रस्य स्वपुत्रेषु विजयाशां शिथिलीकृत्य पाण्डवेषु जयप्राप्तिमैकान्तिकीमुपसंहरति—**इत्येवमिति**। उपायोपेयभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात्कर्मनिष्ठा परम्परया ज्ञाननिष्ठाहेतुः, ज्ञाननिष्ठा तु साक्षादेव मोक्षहेतुरिति शास्त्रार्थमुपसंहर्तुमितीत्युक्तम् ॥ ७८ ॥

काण्डत्रयात्मकं शास्त्रं पदवाक्यार्थगोचरम्।
आदिमध्यान्तषट्केषु व्याख्याया गोचरीकृतम् ॥ १ ॥

संक्षेपविस्तराभ्यां यो लक्षणैरुपपादितः।
सोऽर्थोऽन्तिमेन संक्षिप्य लक्षणेन विवक्षितः ॥ २ ॥
गीताशास्त्रमहार्णवोत्थममृतं वैकुण्ठकण्ठोद्भवं
श्रीकण्ठापरनामवन्मुनिकृतं निष्ठाद्वयद्योतितम् ॥
निष्ठा यत्र मतिप्रसादजननी साक्षात्कृतं कुर्वती
मोक्षे पर्यवसास्यति प्रतिदिनं सेवध्वमेतद्बुधाः ॥ ३ ॥
प्राचामाचार्यपादानां पदवीमनुगच्छता ॥
गीताभाष्ये कृता टीका टीकतां पुरुषोत्तमम् ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरिविरचिते श्रीमद्भगवद्गीताशांकरभाष्यव्याख्यानेऽष्टादशोऽध्यायः ॥ १८ ॥

( श्लोकानामादितः समष्ट्यङ्काः—७०० )

---

## समाप्तिमगमदिदं गीताशास्त्रम् ॥

# श्रीमद्भगवद्गीताश्लोकाद्यचरणप्रतीक-वर्णानुक्रमः ।

## समाप्तोऽयं श्रीमद्भगवद्गीतापद्यानामकारादिवर्णक्रमः ।

# अथ श्रीमद्भगवद्गीताश्लोकान्तर्गतपदानामकारादिवर्णानुक्रमः ।

## अ.

## ता.



## ति.



## तु.

### या.



### यु.

## सः.



## सा.

समाप्तिमगमदयं श्रीमद्भगवद्गीताश्लोकान्तर्गतपदानां वर्णानुक्रमः ।

# भाष्ये प्रमाणतया संगृहीतानां गीतावाक्यानामन्यग्रन्थस्थितवाक्यानां च वर्णानुक्रमसूची ।

# भाष्ये प्रमाणतया संगृहीतानामुपनिषद्वाक्यानां वर्णानुक्रमसूची ।

इति भाष्यान्तर्गतवाक्यानुक्रमणी समाप्ता ।

+ आर्थिकमेतत् ।